# विन्ध्येश्वरीस्तोत्रम्

श्रीगणेशाय नमः ।
निशुम्भशुम्भमर्दिनीं प्रचण्डमुण्डखण्डनीम् ।
वने रणे प्रकाशिनीं भजामि विन्ध्यवासिनीम् ॥ १॥

त्रिशूलमुण्डधारिणीं धराविघातहारिणीम् ।
गृहे गृहे निवासिनीं भजामि विन्ध्यवासिनीम् ॥ २॥

दरिद्रदुःखहारिणीं सतां विभूतिकारिणीम् ।
वियोगशोकहारिणीं भजामि विन्ध्यवासिनीम् ॥ ३॥

लसत्सुलोललोचनां लतासदेवरप्रदाम् । var जने सदा वरप्रदाम्
कपालशूलधारिणीं भजामि विन्ध्यवासिनीम् ॥ ४॥

करो मुदा गदाधरो शिवां शिवप्रदायिनीम् । var कराब्जदानदाधरां
वरावराननां शुभां भजामि विन्ध्यवासिनीम् ॥ ५॥

ऋषीन्द्रजामिनिप्रदां त्रिधास्यरूपधारिणीम् । var कपीन्द्रजामिनिप्रदां त्रिधास्वरूप
जले स्थले निवासिनीं भजामि विन्ध्यवासिनीम् ॥ ६॥

विशिष्टसृष्टिकारिणीं विशालरूपधारिणीम् ।
महोदरे विशालिनीं भजामि विन्ध्यवासिनीम् ॥ ७॥

पुरन्दरादिसेवितां मुरादिवंशखण्डनीम् । var सुरारिवंशखण्डिताम्
विशुद्धबुद्धिकारिणीं भजामि विन्ध्यवासिनीम् ॥ ८॥

॥ इति विन्ध्येश्वरीस्तोत्रं सम्पूर्णम् ॥